# NYÂYASÂRA

OF

## BHÂSARVAJNA.

श्रीभासर्वज्ञप्रणीतः

# न्यायसारः



PUBLISHED BY

VISHVANÂTH P. VAIDYA,

B. A., M. R. A. S., Barrister-at-Law.

Price Rs. 1-4-0

# NYÂYASÂRA

OF

# BHÂSARVAJNA.

EDITED

**with Notes**

BY


VISHVANÂTHA P. VAIDYA, B. A., (Bombay).

BARRISTER AT LAW MIDDLE TEMPLE, LONDON; SPECIAL MEMBER, THE ROYAL ASIATIC SOCIETY OF ENGLAND, SCOTLAND AND IRELAND; LIFE MEMBER BOMBAY BRANCH, ROYAL ASIATIC SOCIETY; SOMETIME RESEARCH STUDENT, EDINBURGH UNIVERSITY.

*22, Cathedral Street, Bombay.*



BOMBAY:

PRINTED BY B. R. GHANEKAR,

AT THE "NIRNAYA-SAGAR" PRESS, KOLBHAT LANE HOUSE NO. 23,

FOR THE PUBLISHER.

1910.

*Price Rs. 1-4-0*

# श्रीभासर्वज्ञप्रणीतः




# न्यायसारः

महाम्बापुरस्थविश्वविद्यालये बि. ए. इतिपदसम्भावितेन
श्रीलन्दनराजधानीपुरस्थमध्यमन्दिरेतिख्यातधर्म-
शास्त्रप्रवर्तकसमाजान्तःपातिना वैद्योपना-
मकायुर्वेदमहोपाध्यायश्रीप्रभुराम-
तनुजन्मना विश्वनाथेन
संस्कृत आंग्लभाषया
विवृतश्च.

मुंबापुर्यां

तुकाराम जावजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितः ।

शाके १८३२ साधारणनामसंवत्सरे ।

# PREFACE.



While I was a student in the college, I took delight in studying the *Nyâya*, in which I felt keen interest, especially owing to the able lectures on the subject by the late Shastri Bhimâchârya whose very deep study of the subject has resulted in his *Nyâyakosh.* In 1902 I was a guest of Professor Deussen in Germany and in his company I attended the Oriental Congress at Hambürgh where I made acquaintance of many able Sanskritists especially of Professors Jolly, Eggling, Macdonell and Bendal, and found an occasion to come in contact with the late lamented Professor Cowell, whose profound knowledge of the Nyâya, the Vedánt and Buddhism has remained unequalled in the West. During my visit to him in Cambridge we twice discussed some knotty points in the Nyâya Muktâvali and as a result thereof, he advised me to undertake an edition of a good Nyâya Work. In the month of October of the same year I visited Prof. Eggling in Edinburgh. He also advised me to do the same and by way of encouragement, he proposed and got me elected a research student of his University, so as to make me concentrate for an year my studies of Sanskrit literature to that subject. Since then for about an year and a half I worked over several manuscripts in the India Office Library. About the middle of 1903 I undertook to prepare an edition of न्यायसारः of भासर्वज्ञः.

I collected in all six copies of the work, four of which are in the Library of the India Office in London, and two were found in India.

1 The first, a copy only of the text in the India Office Library, is written in Nagari Characters with several letters in Jainic form. These are folios, $9\frac{1}{2}$ in all, from 19 to 28 in continuation of *Keshava Mishra's Tarka Paribhâshâ* which is completed in the middle of folio 19. Both the works are copied by the same scribe. The portion of the *Tarkapâribhashâ* seems to have been very much used and studied, as appear from marginal notes made on that portion of the MS. The portion of न्यायसारः has remained untouched. The MS. is tolerably correct except in the last page where there is a repetition of two lines and twice over of one line. It is written on very strong paper 12″ × 6″ with 15 lines on each page. The colophones at the end of the *parichhedas* are very short and simple. They give no information

as to the author except his name and he is described as परमाचार्यतार्किकसार्वभौमः. This shows that, by the time this MS. was copied, the author was recognised as an able and much respected scholar of Nyâya Philosophy. This MS. I have noted as **B.**

2 The second is a copy of the commentary interposed with the text. The commentary is by भट्टराघवः son of सारङ्गः. This was composed, according to Professor Hall in S'ake year 1174 or 1252 A. D. This manuscript goes as far as the end of second *Parichheda* only. The MS. is very old and very slovenly written, but it is mostly correct. Rághava is a bold writer with flashes of originality and independence. Whenever he differs from his author, he is clear and strong in his view. This copy I have noted as **R.**

3 The third MS. is that of the न्यायतात्पर्यदीपिका a commentary on न्यायसारः by जयसिंहसूरिः pupil of महेन्द्रसूरिः who again was a pupil कृष्णार्षिः who seems to have flourished in the year 1037 A. D. He is known to be the author of सप्तपदी and is mentioned in the प्रवचन-परीक्षा of धर्मसागरः. This copy I have noted as **C.**

4 Besides these three, there is a fourth copy in the India office Library and it is known as Gaikwar's copy. This is very old in appearanee but to my mind it is not so. The person who sold it to the learned collector of MSS. seems to have used the artifice of putting it in a smoky and dirty place which has given it, the oldish appearance. It is a copy of the above No. 3 and often incorrect. This I have noted as **G.**

5 The fifth copy which I saw, belongs to the Library of the Deccan College and was procured for me by Mr. E. T. Giles sometime Director of Public Instruction: Bombay. I have, noted this as **D.**

6 A copy of this work, a very recently made, is in the Library of the Bombay Branch of the Royal Asiatic Society and it was kindly lent to me by the Hon. Secretary Mr. Haigh. This came in my hands very late, after almost the whole of the text was printed. I have however compared it with my text and made such use of it as was possible. I have noted it as **E.**

7 A seventh copy of this was seen by me at Benares in the Queen's College Library. I could not go through it, as in spite of the strong recommendation of Mr. E. I. Giles, the principal of the college could not be induced to allow me to bring it to Bombay.



The first four copies aforesaid, belong to the India Office Library of London and my thanks are due to the Librarian Mr. Thomas for allowing me the use of them in London and also procuring the same to me in Bombay on my return.

I intended to write an introduction discussing the comparative methods of reasoning used in eastern and western systems of logic and had collected some materials for the same. Engagements, over which I had no control, and several difficulties which I had not anticipated, so much hampered my work, that for years together I had either to completely put aside this work or had to do it at long intervals only. The printing of the text and the notes had been completed for over a year and yet I have found no time to put the introduction in shape. I have therefore thought it proper to publish the work without it with a hope, however, that in no distant future I may be able to put it before the public.

*BOMBAY*:
22 Cathedral Street,
*13th September 1910.*

VISHVANATH P. VAIDYA.

# न्यायसारः ।

श्रीशंभवेनमः ।

प्रणम्य शम्भुं जगतः पतिं परम्[1]
समस्ततत्वार्थविदं स्वभावतः ।
शिशुप्रबोधाय मयाऽभिधास्यते
प्रमाणतद्भेदतदन्यलक्षणम् ॥

सम्यगनुभवसाधनं[2] प्रमाणम् । सम्यग्ग्रहणं संशयविपर्ययापोहार्थम् । तत्राऽनवधारणं ज्ञानं संशयः । स च समानधर्माऽनेकधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिकारणभेदात्पंचधा भिद्यते । तद्यथा । समानधर्मात्किमयं स्थाणुः स्यात्पुरुषो वेति । १ । अनेकधर्मादाकाशविशेषगुणत्वात्किमयं शब्दो नित्यः स्यादनित्यो वेति । २ । विप्रतिपत्तेरेके[3] भौतिकानींद्रियाण्याहुरन्ये चा[4]ऽभौतिकानीति । ३ । उपलब्धेः किं सदुदकमुपलभ्यत उताऽसदिति । ४ । अनुपलब्धेः किं विद्यमानः पिशाचो नोपलभ्यते किं वाऽविद्यमानः[5] । ५ । अनवधारण[6]त्वादूहाऽनध्यवसाययो र्न संशयादर्थान्तरभावः[7] । तद्यथा वाह्यालीप्रदेशे पुरुषेणाऽनेनभवितव्यमित्यूहः । किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसायः ॥ मिथ्याऽध्यवसायो विपर्ययः । तद्यथा । द्वौ चन्द्राविति । सुप्तस्य गजदर्शनं

---

1 परं C, R, D. वरं B.
2 ससम्यग° D.
3 के° G. R; को° B.
4 चा°. C. च° B. त्व° D.
5 अविद्यमान इति° D.
6 त्वा° B. त्वाविशेषात् C.
7 भावः° B. भाव इति° C, D.

चेति ॥ [1]स्मरणज्ञानव्यवच्छेदार्थमनुभवग्रहणम् ॥ प्रमातृप्रमेयव्यवच्छेदार्थं फलाद्भेदज्ञापनार्थं च साधनग्रहणम् ॥ सम्यगनुभवः प्रमा । [2]प्रमाकरणं प्रमाणम् । प्रमाश्रयः प्रमाता । प्रमाविषयः प्रमेयमिति ॥ तत्रिविधम् । प्रत्यक्षमनुमानमागम इति ॥

तत्र सम्यगपरोक्षानुभवसाधनं प्रत्यक्षम् । तद्द्विविधम् । योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति ॥ तत्राऽयोगिप्रत्यक्षं प्रकाशदेशकालधर्माद्यनुग्रहादिन्द्रियार्थसंबंधविशेषेण स्थूलार्थग्राहकम् । तद्यथा । [3]चक्षुःस्पर्शनयो[4]गाद्घटादिद्रव्यज्ञानम् । संयुक्तसमवायात्ताभ्यां घट[5]त्वादिसंख्यापरिमाणादिज्ञानम् । चक्षुषैव रूपज्ञानम् । स्पर्शनेनैव स्पर्शज्ञानम् । घ्राणेनैव गन्धज्ञानम् । रसनेनैव रसज्ञानम् । मनसैव सुखादिज्ञानम्[6] ॥ एतेषु संख्यादिष्वाश्रितानां सामान्यानां स्वाश्रयग्राहकैरिन्द्रियैः संयुक्तसमवेतसमवायाद्ग्रहणम् ॥ [7]श्रोत्रसमवायात् श्रवणेनैव शब्दज्ञानम् ॥ [8]तदाश्रितसामान्यज्ञानं समवेतसमवायात् ॥ [9]तदेतत्[10]पंचविधसंबंधसंबद्धविशेषणविशेष्यभावा[11]द्दृश्याभावसमवाययोर्ग्रहणम् । तद्यथा । घटशून्यं भूतलम् । इह भूतले घटो नास्तीति । [12]तथाहि तंतवः पटसमवायवंतः । तंतुषु पटसमवाय इति । इत्येवं [13]सर्वांश उदाह-

---

1 स्मरण° B. C. स्मरणा° R.

2 D omits the whole phrase.

3 चक्षुःस्पर्शन° D.

4 योगात्° B. संयोगात्° C.

5 घटत्वसंख्या° D.

6 ज्ञानमिति° D.

7 श्रोत्रसमवायात् श्रवणेनैव शब्दज्ञानम्° G; श्रोत्रसमवायात् शब्दग्रहणम्° B, D.

8 तदाश्रितसामान्यज्ञानं समवेतसमवायात्° C; समवेतसमवायात्तदाश्रितसामान्यज्ञानम्° B.

9 तदेतत्° B; तत् C; एतत् D.

10 पंचविध° B; पंच° C, D.

11 भावाद्दृश्याभावसमवाययोर्ग्रहणम्° C. R, D. भावाद्दृश्यते समवायार्थग्रहणम्° B.

12 तथाहि······पटसमवाय इति° B, D. and G omit this. R. has it.

13 एवं सर्वत्रोऽद्दा° D.



रणीयम् । समवायस्तु क्वचिदेवग्रहणम् । [1]यथा इह घटे रूपसमवायः । रूपसमवायवान्घटः ॥

योगिप्रत्यक्षं तु देशकालस्वभावविप्रकृष्टार्थग्राहकम् ॥ तच्च द्विविधम् युक्तावस्थायां वियुक्तावस्थायां चेति ॥ तत्र युक्तावस्थायामात्मान्तःकरणसंयोगादेव धर्मादिसहिता[2]ऽशेषार्थग्रहणम् ॥ वियुक्तावस्थायां तु चतुष्टयत्रयद्वयसन्निकर्षाद्ग्रहणं यथा[3]संभवेन योजनीयम् ॥ अत्रै[4]वार्षमन्तर्भूतम् । प्रकृष्ट[5]धर्मजत्वाऽविशेषादिति ॥

तच्च द्विविधम् । [6]सविकल्पं निर्विकल्पं च ॥ तत्र [7]संज्ञासंज्ञिसंबंधोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पम्[8] [9]यथा देवदत्तोयं दंडीत्यादि ॥ वस्तुस्व[10]भावमात्रावभासकं निर्विकल्पम्[11] यथा प्रथमाक्षसन्निपातजं ज्ञानम् । युक्तावस्थायां योगिज्ञानं च ॥

इति न्यायसारे प्रथमः परिच्छेदः ॥

---

1 यथारूपसमवायवान्घटः । इह घटे रूपसमवाय इति ।

2 सहिता° B; सहितात्° C, G, R;

3 संभवेन° R, C. संभावन° B.

4 वार्षमन्त° B, C. वार्षमप्यन्त° R.

5 धर्मजत्वा° C. धर्मज्ञता° B,

6 सविकल्पकम् निर्विकल्पके° D.

7 संज्ञासंज्ञि° B, R, D; संज्ञादि° C.

8 कल्पकम्° D.

9 यथा देवदत्तोयं दंडीत्यादि° B, C; तदयंपरमाणू रूपवानित्यादि° R.

10 वस्तुस्वरूप° D.

11 कल्पकम् D.

सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानम् ॥ स्वभावतः साध्येन साधनस्य व्याप्तिरवि[1]नाभावः । स द्विवि[2]धोऽन्वयव्यतिरेकभेदात् ॥ साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः । साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिर्व्यतिरेकः ॥ साधनं लिङ्गम् । त[3]च्च द्विविधम् दृष्टं सामान्यतोदृष्टं च । तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टम् यथा धूमोऽग्नेरिति । स्वभावविप्रकृष्टार्थाऽनुमापकं सामान्यतोदृष्टम् यथा रूपादिज्ञानं चक्षुरादेरिति ॥

तत्पुनर्द्विविधम् । स्वार्थं परार्थं चेति । तत्र परोपदेशानपेक्षं स्वार्थं । परोपदेशापेक्षं परार्थम् । परोपदेशस्तु पंचावयवं वाक्यम् ॥ प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥

तत्र प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा य[4]था शब्दोऽनित्यः ॥

साधनत्वख्यापकं लिंगवचनं हेतुः[5] । स[6] त्रिविधः । अन्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकी चेति ॥ तत्र पंचरूपोऽन्वयव्यतिरेकी । रूपाणि तु पक्षधर्मत्वं सपक्षेसत्वम् विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं च ॥

तत्र साध्यधर्मवि[7]शिष्टः पक्षः । तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्मत्वम् ॥ साध्यसमानधर्मा धर्मी सपक्षः । तत्र सर्वस्मिन्ने[8]कदेशेवा हेतोर्वृत्तिः सपक्षेसत्वम् ॥ साध्यव्यावृत्तधर्मा धर्मी विपक्षः । तत्र सर्वस्मि[9]न्विपक्षे हेतोरवृत्तिर्विपक्षाद्व्यावृत्तिः ॥ प्रमाणा[10]ऽविरोधिनि प्रतिज्ञा[11]ते-

1 अविनाभावः C, D. अनादिभावः B.

2 °विधोऽन्वय G, C. विधः । अन्वय° B, D.

3 तच्चद्वि° B, D. तद्विवि° C, R, G.

4 यथा अनित्यः शब्द इति D.

5 Here D. adds यथा तीव्रादिधर्मोपेतत्वात् ।

6 सच° D.

7 °विशिष्टो धर्मी° C, G, D.

8 सर्वस्मिन्नेकदेशेवा C, G, D. सर्वस्मिन्° R.

9 समस्तेपि° C, G.

10 प्रमाणाऽविरोधिनि° C, G. प्रमाणाद्विरोधिनि° B.

11 प्रतिज्ञातेऽर्थे° B, R, D; प्रतिज्ञातार्थे° C, G.



ऽर्थे हेतोर्वृत्तिरबाधितविषयत्वम् ॥ साध्यतद्विपरीतयोः साधनस्याऽत्रिरूपत्वमसत्प्रतिपक्षत्वम् ॥

स द्विविधः । सपक्षवृत्तिभेदात् तद्यथा शब्दोऽनित्यः कार्यत्वादिति स[2]पक्षव्यापकः । सामा[3]न्यवत्वे सति-अस्मदादिबाह्येन्द्रियग्राह्यत्वादिति सपक्षैकदेशवृत्तिः ॥

पक्षव्यापकः सपक्षवृत्तिरविद्यमानविपक्षः केवलान्वयी । स[5] पूर्ववद्विविधः । तद्यथा विवादास्पदीभूतान्यदृष्टादीनि कस्यचित्प्रत्यक्षाणि प्रमेयत्वात्करतलादिवदिति स[6]पक्षव्यापकः । सैव प्रतिज्ञा मीमांसकानामप्रत्यक्षत्वादस्मत्सुखादिवदिति सपक्षैकदेशवृत्तिः ॥

के[7]वलव्यतिरेकी यथा पक्षव्यापकोऽविद्यमानसपक्षो विपक्षाद्व्यावृत्तः । स[8] चाऽप्रसंगोन्नेयी प्रसंगोन्नेयी च । स[9]र्वं कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वात्[10] यथाऽऽका[11]शे । प्रसंगद्वारेण[12] यथा नेदं निरात्मकं जीवच्छरीरमप्राणादिमत्त्वप्रसंगाल्लोष्ठवदिति ॥

एतेन हेत्वाभासानामहेतुत्वं भवति । य[13]तो हेतुत्व[14]लक्षणर-

1 साधनस्यापि C, G. साधनस्य त्रि° B. साधनस्यात्रि° D, R.

2 सर्वसपक्ष° D.

3 अनित्यः शब्दः सामान्यत्वे D.

4 ग्राह्यत्वात् G, C, D. वाह्यत्वात् B.

5 केवलान्वयी पूर्ववद्विविधः° C, G, R. स पूर्वं द्विविधः B.

6 D omits सपक्षव्यापकः

7 D puts केवलव्यतिरेकी after व्यावृत्तः in the sentence.

8 D omits this from the body of the text but puts in the marginal note viz. केवलव्यतिरेकी द्विधा. अप्रसंगोन्नेयी प्रसंगोन्नेयी च । पूर्वं अप्रसंगोन्नेयिनमाह ।

9 D puts सर्वं कार्यं after पूर्वकम्, and यथा in the beginning of the sentence.

10 D adds यत्सर्ववित्कर्तृकं न भवति तत्कादाचित्कमपि न भवति in the body of the text; but it must be an annotation put in by mistake of the scribe.

11 D. आकाशम् ।

12 puts in बा.

13 C, G and D omit यतो°.

14 D omits त्व°.

हिता हेतुवदाभासमाना हेत्वाभासाः । ते चा[1]नेकप्रकारा असिद्धविरुद्धाऽनैकान्तिकाऽनध्यवसितकालात्ययापदिष्टप्रकरणसमाः ॥

तत्राऽनिश्चितपक्षवृत्तिरसिद्धः । पक्षविपक्षयोरेव वर्तमानो विरुद्धः । प[2]क्षसपक्षविपक्षवृत्तिरनैकान्तिकः । साध्याऽसाधकः पक्ष एव वर्तमानोऽनध्यवसितः । प्रमाणबाधिते पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः। स्व-परपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः॥ यद्यपि चैषां सूक्ष्मा भेदा अनंतत्वान्न शक्यन्ते वक्तुं तथापि स्थूलां दृष्टिमाश्रित्य कियंतो भेदाः प्रदर्श्यन्ते ॥

असि[3]द्धस्तावत् । स्वरूपासिद्धो यथाऽनित्यः शब्दश्चा[4]क्षुषत्वात् । १ । व्यधिकरणाऽसिद्धो यथाऽनित्यः शब्दः प[5]टस्य कृतकत्वात् । २ । विशेष्याऽसिद्धो यथाऽनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात् । ३ । विशेषणाऽसिद्धो यथाऽनित्यः शब्दश्चाक्षुषत्वे सति सामान्यवत्त्वात् । ४ । वि[6]भागाऽसिद्धो यथाऽनित्यः शब्दः प्रयत्नान्तरीयकत्वात् ।५। आश्रयाऽसिद्धो यथाऽस्ति प्रधानं विश्वपरिणामित्वात् । ६ । आश्रयैकदेशाऽसिद्धो यथा नित्याः प्रधानपुरुषेश्वरा अकृतकत्वात् । ७ । व्यर्थविशेष्याऽसिद्धो यथाऽनित्यः शब्दः कृतकत्वे सति सामान्यवत्त्वात् ।८। व्यर्थविशेषणाऽसिद्धो-यथाऽनि[7]त्यः शब्दः सामान्यवत्त्वे सति कृतकत्वात् । ९ । संदिग्धाऽसिद्धो यथा धूमबाष्पादिविवेकाऽनिश्चये कश्चिदाहाऽग्निमानयं प्रदेशो धूमवत्त्वात् । १० । संदिग्धविशेष्याऽसिद्धो यथाऽद्यापि रागादियुक्तः कपि[8]लः पुरुषत्वे स[9]त्यद्याप्यनुत्पन्नतत्वज्ञानत्वात् । ११। संदिग्धविशेषणाऽसिद्धो यथाऽद्यापि रागादियुक्तः कपिलः

1 D omits ते चानेक···रा°.
2 पक्षत्रयवृत्तिः° R.
3 असिद्धभेदाः° D.
4 शशविषाणत्वात्°. R.
5 घटस्य° D.
6 भागासिद्धो° D.
7 अयं धूमो दहनजन्यः सामान्यवत्त्वे सति धूमवत्त्वाद्° R.
8 °कः B.
9 °सत्यद्याप्य° C, D. सति सर्वदाप्य° B



सर्वदा तत्वज्ञानरहितत्वे सति पुरुषत्वात् । १२ ॥ एतेऽसिद्धभेदा यदोभयवाद्यसिद्धत्वेन विवक्षितास्तदोभयाऽसिद्धा भ[1]वन्ति । यदा त्वन्यतरवाद्यसिद्धत्वेन विवक्षितास्तदान्यतराऽसिद्धा भवन्ति ॥

विरुद्धभेदास्तु सति सपक्षे चत्वारो विरुद्धाः ॥ पक्षविपक्षव्यापको यथा नित्यः शब्दः कार्यत्वात् । १ । विपक्षैकदेशवृत्तिः पक्षव्यापको यथा नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात् ।२। पक्षविपक्षैकदेशवृत्तिर्यथा नित्यः शब्दः प्रयत्नान्तरीयकत्वात् । ३ । पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा नित्या पृथिवी कृतकत्वात् । ४ ।

असति सपक्षे चत्वारो विरुद्धाः ॥ पक्षविपक्षव्यापको यथाऽऽकाशविशेषगुणः शब्दः प्रमेयत्वात् । १ । पक्षव्यापको विपक्षैकदेशवृत्तिर्यथाऽऽकाशविशेषगुणः शब्दः कार्यत्वात्[2] । २ । [3]पक्षविपक्षैकदेशवृत्तिर्यथाऽऽकाशविशेषगुणः शब्दः प्रयत्नान[4]न्तरीयकत्वात् । ३ । वि[5]पक्षव्यापकः पक्षैकदेशवृत्तिर्यथाऽऽकाशविशेषगुणः शब्दोऽपदात्मकत्वात् । ४ ।

ननु चत्वार एव विरुद्धभेदा नान्ये ते[6]षामसिद्धलक्षणोप[7]पन्नत्वेनाऽसिद्धत्वात् । नैष दोष उभयलक्षणोपपन्नत्वेनोभयव्यवहारविषयत्वात् तुलायां प्रमाणप्रमेयव्यवहारवत् ॥

अनैकान्तिकभेदास्तु । पक्षत्रयव्यापको यथाऽनित्यः शब्दः प्रमेयत्वात् । १ ।पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा नित्यः शब्दः प्रत्यक्षत्वात् । २ । पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथाऽयं [8]गौर्विषाणित्वात् । ३ । पक्षविपक्षव्यापकः सपक्षैकदे-

1 D omits भवन्ति.
2 बाह्येन्द्रियग्राह्यत्वात् C, D.
3 जयसिंह puts this as second and not third and so does D.
4 D omits न.
5 पक्षैकदेशवृत्तिर्विपक्षव्यापकः° B.
6 B omits ते.
7 लक्षणोपपन्नत्वात्° C, D.
8 गौरवं° D.

शवृत्तिर्यथा नायं गौर्विषाणित्वात् । ४ । पक्षत्रयैकदेशवृत्तिर्यथाऽनित्या पृथिवी प्रत्यक्षत्वात् । ५ । पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा द्रव्याणि दिक्कालमनांसि–अमूर्तत्वात् । ६ । पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा न[1] द्रव्याणि दिक्कालमनांस्य[2]मूर्तत्वात् । ७ । सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा न द्रव्याण्याकाशकालदिगात्ममनांसि क्षणिकविशेषगुणरहितत्वात् ॥ ८ ॥

अनध्यवसितभेदास्तु । अविद्यमानसपक्षविपक्षः पक्षव्यापको यथा सर्वमनित्यं सत्त्वात् । १ । अविद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा सर्वमनित्यं कार्यत्वात् । २ । विद्यमानसपक्षविपक्षः पक्षव्यापको यथाऽनित्यः शब्द आकाशविशेषगुणत्वात् । ३ । विद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा सर्वं द्रव्यमनित्यं क्रियावत्वात् । ४ । अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा सर्वं कार्यं नित्यमुत्पत्तिधर्मकत्वात् । ५ । अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेशवृत्तिर्यथा सर्वं कार्यं नित्यं सावयवत्वात् । ६ ।

कालात्ययापदिष्टभेदास्तु । प्रत्यक्षविरुद्धो यथाऽनुष्णोऽग्निः कृतकत्वात् । १ । अनुमानविरुद्धो यथा[3]ऽनित्याः परमाणवो मूर्तत्वात् । २ । आगमविरुद्धो यथा ब्राह्मणेन [4]सुरा पेया द्रवद्रव्यत्वात् क्षीरवत् । ३ । प्रत्यक्षैकदेशविरुद्धो यथा सर्वं तेजोऽनुष्णं रूपित्वात् । ४ । अनुमानैकदेशविरुद्धो यथा नित्याऽऽश्रया द्रवत्वरूपरसगन्धस्पर्शा नित्या अप्रदेशवृत्तिसमानजात्यारंभकत्वे सति परमाणुवृत्तित्वात् तद्गतैकत्ववत् । ५ । आगमैकदेशविरुद्धो यथा सर्वेषां देवर्षीणां शरीराणि पार्थिवानि शरीरत्वादस्मदादिशरीरवत् । ६ ।

1 त° B. न°. C.

2 C omits अ which is a mistake as shown by the commentary.

3 परमाणवो नित्या मूर्तत्वात्° C.

4 पेयं सुरादि° C.



प्रकरणसमस्योदाहरणं यथाऽनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात्सपक्षवत् । नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवत् ॥

एकत्र तुल्य[1]लक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाऽव्यभिचारीत्येके यथा [2]नित्यमाकाशम[3]मूर्तत्वादात्मवत् । एव[4]मनित्यमाकाशमस्मदादि–बाह्येन्द्रियग्राह्यगुणाधारत्वात् घटवदिति ॥ स खलु पुरुषविशेषमपेक्षमा[5]णो हेत्वाभासो भवत्यन्यतरासिद्धवत् ॥

सम्यग्दृष्टान्ताभिधानमुदाहरणम् । तद्द्विविधम् साधर्म्य–वैधर्म्यभेदात् ॥ तत्रान्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणं यथाऽनित्यः शब्दस्तीव्रादिधर्मोपेतत्वात् । यद्यत्तीव्रादिधर्मोपेतं तत्तदनित्यं दृष्टं यथा सुखादिः ॥ व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणम् । यदनित्यं [6]न भवति तत्तीव्रादिधर्मोपेतमपि न भवति यथाकाशमिति ॥

[7]एतेनोदाहरणाभासानामनुदाहरणत्वमुक्तं भवति ॥ उदाहरणलक्षणरहिता उदाहरणवदाभासमाना उदाहरणाभासास्तेचानेकप्रकाराः ॥ यथा चाऽनित्यं मनो मूर्तत्वादि[8]त्यस्मिन्ने[9]व प्रयोगे सर्वेप्युदाहरणाभासा उच्यन्ते ॥ यन्मूर्तं तदनित्यं दृष्टं यथा-परमाणुरिति साध्यविकलः । १ । यथा [10]कर्मेति साधनविकलः । २ । यथाऽऽकाशमित्युभयविकलः । ३ । यथा [11]खपुष्पमित्याश्र-

1 तुल्यलक्षण° B. तुल्यक्षण° C.

2 नित्य° B. न्यत्य C.

3 अमूर्तत्वात्° B.C. अमूर्तद्रव्यत्वात्° D.

4 एवम्. B. C omits एवम्.

5 °माणा B. °माणो C.

6 D omits न.

7 D omits. एतेन···भवति.

8 °दित्येतस्मि° D.

9 D omits एव.

10 B here quotes a passage from the commentary of जयसिंह.

11 शशविषाणम् C. D; पुष्ण° B.

यहीनः । ४ । घटवदित्[2]यव्याप्त्यभिधानम् । ५ । यदनित्यं तन्मूर्तं दृष्टमिति विपरीतव्याप्त्यभिधानम् । ६ । इत्येतौ वचनदोषौ ॥ यत्त्व[3]नित्यं न[4] भवति तन्मूर्तमपि न भवति यथा परमाणुरिति साधनाऽव्यावृत्तः । ७ । यथा कर्मेति साध्याऽव्यावृत्तः । ८ । यथा घट इत्युभयाऽव्यावृत्तः ।९। यथा खपुष्पमित्याश्रयहीनः।१०। आकाशवदित्यव्याप्त्यभिधानम् । ११ । यन्न[5] मूर्तं तदनित्यं न भवति यथाऽऽकाशमिति विपरीतव्याप्त्यभिधानम् । १२ । इ[6]त्येतौ वचनदोषौ ॥ अत्राद्याः षट् साधर्म्योदाहरणाभासाः । इतरे षट् वैधर्म्योदाहरणाभासा इति ॥ अन्ये तु संदेहद्वारेणाऽपरान[7]ष्टावुदाहरणाभासान्वर्णयंति ॥ संदिग्धसाध्यो यथा महाराज्यं करिष्यत्ययं सोमवंशोद्भूतत्वाद्विवक्षितराजपुरुषवदिति । १३ । संदिग्धसाधनो यथा नायं सर्वज्ञो रागादिमत्त्वाद्रथ्यापुरुषवत् । १४ । संदिग्धोभयो यथा स्वर्गं गमिष्यत्ययं विवक्षितः पुरुषः समुपार्जितशुक्लधर्मत्वाद[8]परिचितदेवदत्तपुत्रवत् । १५ । संदिग्धाश्रयो यथा नायं सर्वज्ञो बहुवक्तृ[9]कत्वात् भविष्यद्देवदत्तपुत्रवत् । १६ । संदिग्धसाध्याऽव्यावृत्तो यथा यो महाराज्यं न करिष्यति स सोमवंशोद्भूतो[10] न भवति यथाऽन्यो राजपुरुषः । १७ । संदिग्धसाधनाव्यावृत्तो यथा यस्तु सर्वज्ञः स रागादिरहितो यथा समस्तशास्त्राभिज्ञ इति । १८ । संदिग्धोभयाव्यावृत्तो यथा यः स्वर्गं न गमिष्यति स समुपार्जितशुक्लधर्मोऽपि न भवति यथा

1 आश्रयविकलः° D.

2 घटवदिति व्याप्त्यनभिधानम् । R.

3 यच्च° B. यत्त्व° R. यन्नि° C. D;

4 D omits न भवति.

5 यदमूर्तं° D.

6 D omits इति.

7 अष्टानुदा° B. अष्टावुदा° C. D;

8 देवदत्तवत् C. D, अपरिचितदेवदत्तपुत्रवत्° B;

9 वक्तृत्वात्° B.

10 °तोपि B. D;



दुःस्थः पुरुषः । १९ । संदिग्धाश्रयो यथा यः सर्वज्ञः स[1] बहुवक्ता न भवति यथा भविष्यद्देवदत्तपुत्रः । २० ॥

दृष्टान्ते प्रसिद्धाऽविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्ति[2]ख्यापकं वचनमुपनयः ॥ [3]स पूर्ववद्द्विविधः । तथाच तीव्रादिधर्मोपेतः शब्द इति साधर्म्योपनयः । न तथा च तीव्रादिधर्मोपेतः शब्दो न भवतीति वैधर्म्योपेतः ॥

उपनयानंतरं सहेतुकं प्रतिज्ञावचनं निगमनं । तस्मादनित्य एवेति ॥ न चेदमनर्थकम् । [4]साध्यविरुद्धाभावप्रतिपादकप्रमाणसूचकत्वादिति । न च तदंतरेण साध्यावधारणमुपपद्यते । तथा चोक्तम्

विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति । गौ. सू. १-१-४१. ॥

निगमनाभिधानमसाधनाङ्ग[5]मभ्युपगम्य बाधकं प्रमाणमभ्युपगच्छतो निग्रहस्थानं प्रसज्येत । निगमनार्थत्वाद्बाधकस्य । निगमनार्थविप्रतिपत्तौ हि बाधकप्रमाणोपन्यासोऽभ्युं[6]क्तो हेत्वर्थविप्रतिपत्तौ तत्साधकप्रमाणोपन्यासवदिति ॥ सोयं परमो न्यायो विप्रतिपन्नपुरुषप्रतिपादकत्वात् कथाप्रवृत्तिहेतुत्वाच्च ॥

वादिप्रतिवादि[7]नोः पक्षप्रतिपक्ष[8]परिग्रहः कथा । सा द्विविधा

1 स बहुवक्ता न भवति C. D; सोऽयं न वदति B;

2 प्रतिपादकं D. ख्यापकं C;

3 D omits this whole phrase.

4 Rághava quotes another reading viz. साध्यविरुद्धप्रतिपादकप्रमाणाभावसूचकत्वात्°.

5 B omits ग.

6 °भ्युक्तो B. युक्तो C. D;

7 °नोः C. R;° नः B;

8 प्रतिपक्षग्रहः° B. प्रतिपक्षपरिग्रहः C. R;

वीतरागकथा विजिगीषुकथा चेति । यत्र वीतरागो वीतरागेण सह तत्वनिर्णयार्थं साधनोपालंभौ करोति सा वीतरागकथा वादसंज्ञयैवोच्यते । तथा चोक्तं

प्रमाण[1]-तर्कसाधनोपालंभः सिद्धान्ताविरुद्धः पंचावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ गौ. सू. १-२-१.

तं प्रतिपक्षस्थापनाहीनमपि वा कुर्यात् । प्रयोजनार्थित्वेन-यथा शिष्यो गुरुणा सह प्रश्नद्वारेणेवेत्यर्थः ॥ यत्र विजिगीषुर्विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्तते वीतरागो वा पराऽनुग्रहार्थं ज्ञानांकुरसंरक्षणार्थं च प्रवर्तते सा चतुरंगा वादिप्रतिवादिसभापतिप्राश्निकांगा विजिगीषुकथा जल्पवितंडा संज्ञोक्ता ॥ तथाचाह

तत्वाध्यवसायसंरक्षणार्थं [2]जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कंटकशाखावरणवत् । गौ. सू. ४-२-५०. ॥

यथो[3]क्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः । गौ. सू. १-२-२. ॥

स प्रतिपक्षस्थापनाहीनो वितण्डा । गौ. सू. १-२-३. ॥

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् । गौ. सू. १-२-१० ॥

तत्रिविधम् वाक्छलं सामान्यछलमुपचारच्छलं चेति । गौ. सू. १-२-११ ॥

यथा

अविशेषाभिहितेऽर्थे वक्तुरभिप्राया[4]दर्थान्तरकल्पना वाक्छलम् । गौ. सू. १-२-१२ ॥

नवकम्बलोयं माणवक इत्युक्ते छलवाद्याह कुतो नवकंबला इति । तस्याऽप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यं । नवः कंबलो-

1 प्रमाणातर्क° B. प्रमाणतर्क C. R;
2 B omits जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं.
3 यथोपलक्षणोपपन्न° B.
4 °प्रायापरिज्ञानात् B. C.



ऽस्येति वक्तुरभिप्रायाऽपरिज्ञानाद्वा[1] विप्रतिपत्तेर्वा विपरीतज्ञानादिति ॥

संभवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ गौ. सू. १-२-१३ ॥

अहो नु[2] खल्वसौ ब्राह्मणश्चतुर्वेदाभिज्ञ इत्युक्ते केनचिन्न्यायवाद्याह किमत्राश्चर्यं संभवति हि ब्राह्मणे चतुर्वेदाभिज्ञत्वमित्यत्र च्छलवाद्याह न व्रात्येनानैकान्तिकत्वात् । तस्याऽपि पूर्ववन्निग्रहस्थानं वाच्यम् । कस्माद्धेतुत्वेना[3]ऽविवक्षितत्वात् । किं तर्हि । ब्राह्मणत्वे सति चतुर्वेदाभिज्ञत्वमाश्चर्यकारणं न भवति[4] सुक्षेत्रशालिसंपद्वत् ॥

उपचारप्रयोगे मुख्यार्थकल्पनया प्रतिषेध उपचारच्छलम् । यथा मञ्चाः क्रोशन्तीत्युक्ते च्छलवाद्याह पुरुषाः क्रोशन्ति न मञ्चास्तेषामचेतनत्वात् । इति तस्याऽपि निग्रहस्थानं वाच्यं पूर्ववत् । उभयथाऽपि लोके शास्त्रे च प्रयोगदर्शनादिति ॥

प्रयुक्ते हेतौ समीकरणाभिप्रायेण प्रसंगो जातिः ॥ पराजयनिमित्तं निग्रहस्थानमिति बहवश्चानयोः सूक्ष्मा भेदास्तेषां कियन्तो भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते ॥

साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्ते[5]ः साधर्म्यवैधर्म्यसमौ । गौ. सू. ५-१-२. ॥

यथाऽनित्यः शब्दः कृतकत्वाद्घटवदित्युक्ते जातिवाद्याह यद्यनित्यघटसाधर्म्यात्कृतकत्वादनित्यः शब्द इष्यते तर्हि नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः प्राप्नोति यदि च नित्याकाशवैधर्म्यात्कृतकत्वादनित्य इष्यते [6]तर्हि घटाद्यनित्यवैधर्म्यादमूर्तत्वा[7]-

1 वादिप्रतिपत्तिर्वा° B. वा विप्रतिपत्तेर्वा° C. D; वा विप्रतिपत्तिर्वा° R;
2 न° B. C; नु R. D;
3 हेतुत्वस्या° D; हेतुत्वेना° B. C.
4 °तीत्यभिप्राय° D;
5 त्तेः गौ. D; त्तिः B. C.
6 D. omits तर्हि.
7 मूर्तत्वं तर्हि° D.

न्नित्यः प्राप्नोति विशेषाभावात् । अनयोरुत्तरम् । अविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वाभ्युपगमादप्रसंगो धूमादिवत् ।

साध्यदृष्टान्तयोर्द्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यवि[1]कल्पसाध्यसमाः । गौ. सू. ५-१-४. ॥

साध्ये दृष्टान्ताद[2]निष्टधर्मप्रसंग उत्कर्षसमः ॥ इष्टधर्मनिवृत्तिरपकर्षसमः ॥ यदि कृतकत्वाद्घटवद[3]नित्यशब्द इष्यते तदा[4] घटवदेव सावयवोऽपि स्यात् । अथ[5] नैवमनित्योऽपि तर्हि न[6] स्यादविशेषादिति । अश्रावणश्च घटो दृष्टः शब्दोपि श्रावणो न स्यादविशेषादिति[7] । शब्दो यदि कृतकत्वाऽनुमानेनाऽनित्यो वर्ण्यते तदा घटोऽपि कृतकत्वाऽनुमानेनाऽनित्यो वर्ण्यः स्यात् । घटस्तेनैवानुमानेनाऽनित्यो वर्ण्यते ततः शब्दोप्यवर्ण्यः स्यादविशेषादिति वर्ण्यावर्ण्यसमौ ॥ कृतकत्वाऽविशेषेऽपि[8] यथामूर्तत्वाऽमूर्तत्वादिधर्मविकल्पस्तथा नित्यत्वाऽनित्यत्वविकल्पोऽपि स्यादविशेषादिति विकल्पसमः ॥ यदि कृतकत्वादुभयोरनित्यत्वं तर्हि साध्यत्व[9]मुभयोः स्यान्न वा कस्यचिदविशेषादिति साध्यसमः[10] ॥

एतेषामुत्तरं । किंचित्साधर्म्यादुपसंहारे सिद्धे[11] वैधर्म्यादप्रतिषेधः । गौ. सू. ५-१-५ ॥

किंचित्साधर्म्याद्धूमवत्त्वादिलक्षणात्साध्यदृष्टान्तयोर्धर्मविकल्पेऽपि व्यवस्था दृष्टा । तदपलापे लोकादिविरोधः सर्वाऽनुमानानामप्रामाण्यप्रसंगश्चेति ॥

1 °पकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः C. गौ. R. °पकर्षविकल्पसमाः B.

2 दि° B. द.° C. D.

3 दि° B. द.° C. D.

4 तथा B. तदा C. D.

5 अथानेक° B.

6 त° B.

7 This is the reading of R and D. C. omits, certainly by mistake, श्रावणो न स्यात् ...शब्दो.

8 षो° B. C. कृतकत्वादि° C.

9 साध्यत्वं तदा D.

10 C. omits साध्यसमः.

11 °द्धे वै° B.



प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ । गौ. सू. ५-१-७ ॥

यद्ययं हेतुः प्राप्य साध्यं साधयेत्तदोभयोः प्राप्त्यविशिष्टत्वादंगुल्योरिव किं कस्य साध्यं साधनं चेति । अप्राप्यसाधको नास्ति काष्ठादग्निवदिति ॥ अनयोरुत्तरम्[1] ।

घटादि-निष्पत्ति-दर्शनात्पीडने चाभिचारादप्रतिषेधः । गौ. सू. ५-१-८ ॥

प्राप्त्यप्राप्त्यविशेषेऽपि प्रतिनियतार्थवृत्तय एवैते साध्यसाधनत्वादयो धर्मा दृष्टास्ते निराकर्तुमशक्याः सर्वप्रमाणविरोधादिति॥

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः । गौ. सू. ५-१-१२॥

यथाऽनित्यः शब्दः कार्यत्वादित्युक्ते प्रागुत्पत्तेरनित्यत्वे कारणं नास्तीति नित्यः प्रसक्तः । तस्योत्पत्तिरनुपप[2]न्नेति ॥ अस्योत्तरम् ।

तथाभावादुत्पन्नस्य कारणोपपत्तेर्न्न कारण[3]प्रतिषेधः । गौ. सू. ५-१-१३ ॥

अनुत्पन्नः शब्द एव नास्ति कस्य[4] नित्यत्वादिधर्माश्चिन्त्यन्ते ॥

त्रैकाल्याऽसिद्धेर्हेतोरहेतुसमः । गौ. सू. ५-१-१८ ॥

यदि पूर्वं साधनमसति साध्ये कस्य साधनम् । अथ[5] युगपत्तथापि किं कस्य साधनं साध्यं वा द्वयोस्तुल्यकालत्वादिति ॥ अस्योत्तरम् । न हेतुतः साध्यसिद्धेः प्रवृत्त्यादिविरोध इति सूत्रार्थः । प्रतिषेधानुपपत्तेश्च त्रैकाल्यासिद्धिः । स्वमतेनैव[6] प्रतिषेधासिद्धौ[7] हेतुसिद्धिरिति सूत्रार्थः ॥

[8]एकधर्मोपपत्तेरविशेषे सर्वाऽविशेषप्रसंगात्सद्भावोपपत्तिरविशेषसमः । गौ. सू. ५-१-२३ ॥

1 परिहारम्° C.

2 °दुत्पन्नस्य शब्दस्य C.

3 °त्तेर्न्न कारणप्रतिषेधः, गौ.; B.C.and D. omit न्न कारण°.

4 कुतस्तस्यपक्षता इति शेषः R.

5 पश्चादविद्यमानं कथं साधनमथ C.

6 स्ववचनेन C.

7 प्रतिषेधस्यासिद्धौ D.

8 B omits ए.

यथा[1] यदि घटशब्दयोरेकैकस्य[2] कार्यत्वस्योपपत्ते[3]रनित्यत्वेनाऽविशेष इष्यते सर्वभावानां तर्हि सद्भावोपपत्तेरविशेषः प्रसज्यत इति ॥ अत्रेदमुच्यते[4] । सर्वथाऽविशेषे[5] प्रत्यक्षविरोधः । अनित्यत्वेनाऽविशेषे [6]त्वनुमानागम[7]विरोधः । केनचिदविशेषे प्रमेयत्वादिना सिद्धसाधनमिति ॥

निर्दिष्टकारणाभावेऽप्युपलंभादुपलब्धिसमः । गौ. सू. ५-१-२७

पृथिव्यादिषु कार्यत्वसिद्धये निर्दिष्टस्य सावयवत्वस्या[8]ऽभावेऽपि बुद्ध्यादौ कार्यत्वमुपलब्धमिति ॥ अस्योत्तरम् । सपक्षैकदेशस्यापि धूमादेर्गमकत्व[9]दर्शनादप्रतिषेध इति ॥ कथं तर्हि बुद्ध्यादौ[10] कार्यत्वसिद्धिरत[11] आह । कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः । प्रमाणान्तरादपि कार्यत्व[12]सिद्धिरित्यर्थः ॥ प्रमाणान्तरं वाऽनुपलब्धिकारणेष्वसत्सु प्रागूर्ध्वं वा[13]ऽनुपलंभात् घटवदिति ॥

[14]तदनुपलब्धेरनुपलंभादभावसिद्धौ तद्विपरीतो[15]पपत्तेरनुपलब्धिसमः । गौ. सू. ५-१-२९ ॥

तस्य बुद्ध्यादिकार्यस्याऽनुपलब्धेर[16]नुपलंभादभावसिद्धावनुपलब्धिविपरीतोपलब्ध्युपपत्तेः प्रागूर्ध्वमपि बुद्ध्यादेः[17] सद्भावः सेत्स्यतीत्यभिप्रायः ॥ अस्योत्तरम्

अनुपलंभात्मकत्वादनुपल[18]ब्धेरहेतुः । गौ. सू. ५-१-३५ ॥

---

1 B omits यदि. C omits यथा-D has यथा यदि.
2 °रेकस्य B. °रेकैकस्य C.
3 D omits one whole line from रनित्यत्वेन·········सद्भावोपपत्तेः
4 तत्रे° C.
5 विशेषेऽपि D.
6 °षेऽनुमाना° B. °षे त्वनुमाना° C.D.
7 C omits आगम.
8 सावयवत्वस्य° C.
9 गमत्व B.
10 °दे: D.
11 °द्धिरिति C.
12 कार्यत्वादि° D.
13 वा° B. C, चा° R.
14 C. omits this whole line.
15 विपरीतोपलब्ध्युपपत्तेः C.
16 C. omits° रनुपलंभा···लब्धि।
17 बुद्ध्यादिसद्भावः C.
18 °दनुपलब्धेः गौ. D; लब्धिः C.



नास्तीति ज्ञानमनुपलब्धिः सा तत्स्वभावतया प्रत्यात्मसंवेद्या[1] [2]तत्सदनुपलब्धिरसिद्धेत्यभिप्रायः ॥

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्ते[3]र्नित्यसमः । गौ. सू. ५-१-३५ ॥

अनित्यत्वधर्मस्य[4] नित्यं सर्वदा सद्भावे[5] धर्मिणोऽपि शब्दस्य सर्वदा सद्भावः । अथाऽनित्यत्वं सर्वदा नास्ति तथाप्य[6]नित्यत्वाभावान्नाऽनित्यः शब्द इति ॥ अस्योत्तरम्[7] । अनित्यत्वस्य सर्वदाऽभ्युपगमे[8] नित्यत्वविरोधः । अनभ्युपगमे चाऽसिद्धो हेतुः । प्रध्वंसश्चानित्यत्वं तव तस्मिन्सति शब्दसद्भाव इति । एतेनान्यत्वस्यात्मनोऽनन्यत्वादन्यत्वं नास्तीत्यादीन्यसदुत्तराणि प्रत्युक्तानि । निमित्तान्तरात्संज्ञान्तरे योज्यमानेऽर्थे तथाभावस्य निराकर्तुमशक्यत्वात् ॥ आनन्त्यान्न सर्वाण्यपि जात्युत्तराण्युदाहर्तुं शक्यन्ते । सूत्राणामप्युदाहरणार्थत्वादित्युक्ता जातिभेदाः ॥

अथेदानीं निग्रहस्थानान्युच्यन्ते । तान्यपि वि[9]प्रतिपत्त्य[10]प्रतिपत्त्यो विकल्पादसंख्या[11]नि । अतः संक्षेपतो व्युत्पाद्यन्ते ॥

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं[12] पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥

---

1 संवेद्या B. D. वेद्या. C.
2 तदनुपलब्धि° C. तत्सदनुपलब्धिः B.
3 से°, (गौ.) त्ति.° C.
4 अनित्यधर्मस्य° B. अनित्यत्वधर्मस्य° C.
5 सद्भावे B. D; सद्भावात् C.
6 तथाप्यनित्यत्वान्नित्यः शब्द इति C.
7 D omits this.
8 °भ्युपगमे C °भ्युपगमात् B. D;
9 R & C. omit. विप्रति···विकल्पात्°.
10 त्त्यु° B.
11 असंख्यानि B. असंख्यातानि D.
12 अधिकः B. अधिकम् D. C. (गौ.)

३

तत्र साध्ये प्रतिदृष्टान्तधर्मानुज्ञा[1] प्रतिज्ञाहानिः ॥ यथा यदि कृतकत्वाद्[2] घटवदनित्यः शब्द इष्यते तर्ह्याकाशवद्[3]-मूर्तत्वान्नित्यः किन्नेष्यते । एवं प्रतिवादिनोक्तो[4] वाद्याह । भवतु किं नो बाधतं[5] इति । तस्य नित्यत्वाऽभ्युपगमेनाऽनित्यत्वप्रतिज्ञा हीयत इत्यतः प्रतिज्ञाहानिनिग्रहस्थानं भवति[6] । १ ।

प्रतिज्ञातार्थस्य[7] प्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ यथा सर्वमनित्यं सत्वादित्यत्र दृष्टान्ताऽभावेन प्रतिज्ञातार्थ[8]-प्रतिषेधे धर्मो[9] विवादास्पदीभूत[10]लक्षणस्तस्य विकल्पः प्रतिज्ञातार्थ[11]विशेषणत्वेन योजनं । तदर्थ इति प्रतिषेधनिवृत्त्यर्थः । निर्देशो[12] विशेषणाभिधानं[13] विवादास्पदीभूतं सर्वमनित्यमित्येतत्प्रतिज्ञान्तरं निग्रहस्थानं हेत्वन्तरवत् ॥ २ ॥

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः । गौ. सू. ५-२-४ ॥ यथा गुणव्यतिरिक्तं द्रव्यं भेदेनानुलंभाद्घट[14]वत् ॥ ३ ॥

पक्षप्रतिषेधे प्रतिज्ञातार्थाऽपनयनं प्रतिज्ञासंन्यासः । गौ. सू. ५-२-५ ॥ यथाऽनुष्णोऽग्निरित्येतस्य[15] पक्षविरोधित्वेन[16] प्रतिषेधे[17] वाद्याह । संपश्यध्वमहो मध्यस्था नाहमनुष्णमग्निं ब्रवीम्यनुक्तोपालंभोयमित्येत्प्रतिज्ञासन्न्यासलक्षणं निग्रहस्थानम्[18] ॥ ४ ॥

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरनिग्रह-

1 धर्माभ्यनुज्ञा° ( गौतम. better reading ) धर्मानुज्ञा° R. B. D.

2 कार्यत्वात्° R.

3 न चाकाश° B. नन्वाकाश° D.

4 °क्ते B, D.

5 बोध्यतेति D.

6 भविष्यति C.

7 प्रतिज्ञातार्थप्रतिषेधे° (गौ,) D. प्रतिज्ञातार्थस्य प्रतिषेधे C, B.

8 प्रतिज्ञातार्थस्य C.

9 धर्मादित्वा° B.

10 भूतत्वाद्ध° C.

11 प्रतिज्ञातार्थ° B. प्रतिज्ञातेर्थ° D.

12 C & D insert यथामशकार्थो धूम इति before निर्देशो°.

13 C. omits विशेषणाभिधानम्.

14 C. omits घटवत्°.

15 अनुष्णोग्निः कृतकत्वात्°.

16 C. omits पक्षविरोधित्वेन°.

17 प्रतिषेध° B. प्रतिषेधे C. D.

18 B. omits निग्रहस्थानम्.



स्थानम् ॥ यथा नित्या वेदा अस्मर्यमाणकृतकत्वादित्येतस्य[1] जीर्णकूपा[2]ऽऽरामादिभिरनैकान्तिकत्वेन प्रतिषेधे[3] संप्रदायविच्छेदे सतीति विशेषणमिच्छतो[4] हेत्वन्तरं निग्रहस्थानम् । पूर्वस्याऽसाधकस्योपादानात् ॥ ५ ॥

प्रकृतादर्थादप्रतिसबन्धार्थमर्थान्तरम् । गौ. सू. ५-२-७ ॥ यथा नित्यः शब्दो[5]ऽस्पर्शवत्त्वादिति हेतुः । हेतुश्च हिनोते र्धातोः तुनि प्रत्यये सति कृदन्तं पदमित्या[6]दिप्रसक्तानुप्रसक्त्या प्रकृतार्थाऽनुपयोगिशास्त्रा[7]न्तरमुपदिशतोऽर्थान्तरं निग्रहस्थानम् ॥ ६ ॥

वर्णक्रमनिर्देशवन्निरर्थकम् । गौ. सू. ५-२-८ ॥ यथा नित्यः शब्दः कचतटपानां गजबडवत्वात् घझढधभवत् ॥ ७ ॥

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यतीतं[8]मविज्ञातार्थं ॥ यथा यद्वाक्यं त्रिरभिहितमप्यप्रतीतप्रयोगा[9]ऽतिद्रुतोच्चारितादिना निमित्तेन परिषत्प्रतिवादिभ्यां न ज्ञायते तदज्ञानसंवरणायोक्तमविज्ञातार्थं निग्रहस्थानम् ॥ ८ ॥

पौर्वापर्याऽयोगादप्रतिसंबद्धार्थमपार्थकम् । गौ. सू. ५-२-१० ॥ यथा दशदाडिमानि षडपूपाः कुण्डमजाजिनमित्यादिः ॥ ९ ॥

अवयवविपर्यासवचनमप्राप्तकालम् । गौ. सू. ५-२-११ ॥ प्रतिज्ञादीनामर्थवशात्क्रमस्तेषां विपर्ययेणाभिधानं निग्रहस्थानम् ॥ १० ॥

हीनमन्यत[10]मेनाप्यवयवेन न्यूनम् । गौ. सू. ५-२-१२ ॥ साधनाभावे साध्यसिद्धेरयोगात् ॥ ११ ॥

1 °दित्यस्य D.

2 पो° B. कूपारामा° C. D. Raghav explains आरामादिभिरुपवनैः.

3 D. inserts हेतौ.

4 ता° B.

5 शब्दोस्पर्श° C.

6 पदं च नामाख्यातोपसर्गनिपातभेदाच्चतुर्विधमि° D.

7 शास्त्रान्तरम्. C. D. शास्त्रार्थं B.

8 अविज्ञातं ( गौ. )

9 °गातितोच्चा° B.

10 हीनमप्यंतिमेनावयवेन C. हीनमन्यतमेनाप्यवयवेन B. D. गौ.

11 साधनाद्यसिद्धेरयोगादिति B. D. साधनाभावेसाध्यसिद्धेरयोगात्. C.

हेतूदाहरणा[1]भ्यामधिकम् ॥ एकेन [2]कृतत्वादितराऽऽनर्थक्यादिति ॥ १२ ॥

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । गौ. सू. ५-२-१४॥ सार्थकं पुनरभिधानमनुवादस्तद्व्यतिरेकेण पुनर्वचनं पुनरुक्तम् । यथा नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम्[3] ॥ अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् ॥ साधर्म्योदाहरणेऽभिहिते वैधर्म्योदाहरणाऽभिधानमिति । कथं तन्निग्रहस्थानम् । कथावसानविरोधित्वादेकेन [4]कृतार्थत्वादितरानर्थक्यात् ॥ १३ ॥

विज्ञातस्य परिषदा त्रिरभिहितस्याऽप्यप्रत्युच्चारणमननुभाषणं[5] प्रतिवादिनो निग्रहस्थानम् । अप्रत्युच्चारयन्किमाश्रयः परपक्षप्रतिषेधं [6]ब्रूयादिति ॥ १४ ॥

[7]अविज्ञातार्थं चाज्ञानम् ॥ यच्च वाक्यं त्रिरभिहितमपि परिषदाऽवगतार्थं प्रतिवादी प्रत्युच्चारयन्नार्थतः सम्यगधिगच्छति तदज्ञानं नाम निग्रहस्थानं [8]भवति ॥ १५ ॥

कथामभ्युपगम्य तूष्णींभावोऽप्रतिभा वादिप्रतिवादिनो र्निग्रहस्थानम् ॥ १६ ॥

कार्यव्यासंगात्कथाविच्छेदो विक्षेपः । गौ. सू. ५-२-१६ ॥ कथामभ्युपगम्य सभ्येषु मिलितेषु ब्रवीत्यद्य मे महत्प्रयोजनमस्ति तस्मिन्नवसिते पश्चात्कथयिष्यामीति ॥ १७ ॥

स्वपक्ष[9]दोषाभ्युपगमात्परपक्ष[10]दोषो[11] मतानुज्ञा ॥ यः स्वपक्षे

1 C. & गौ. omit भ्याम्.

2 कतकत्वात्°. B.

3 C and D add here नित्योध्वनिरविनाशीशब्द इति पुनरुक्तम्.

4 कृतार्थत्वात् D. कृतत्वात् B.

5 C. inserts here नाम.

6 ब्रूयात्° (वा०) C. कुर्यात्. B. D.

7 अविज्ञातार्थमज्ञानम्. B. ...चाज्ञानम्. C. D. अविज्ञातं चाज्ञानं (गौ.)

8 C and D omit भवति.

9 स्वपक्षे° C. स्वपक्ष° B. गौ.

10 परपक्षं° B. C. परपक्षे. (गौ.)

11 दोषो C. B. दोषप्रसंगो. (गौ.)



मनागपि दोषं न परिहरति केवलं परपक्षे दोषं[1] प्रसंजयति । भवांश्चोर इत्युक्ते त्वमपि चोर इति । तस्येदं निग्रहस्थानम् । स्वयं दोषाभ्युपगमात्[2]

[3]निग्रहप्राप्तस्याऽनिग्रहः पर्यनुयोज्योपेक्षणम् ॥ पर्यनुयोज्यो नाम निग्रहोपपत्त्या [4]चोदनीयस्तस्योपेक्षणं निग्रहप्राप्तौ सत्याम-ननुयोग इति । [5]एतदुभाभ्याम[6]नुक्तया परि[7]षदा वक्तव्यम् ॥१९॥

अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्याऽनुयोगः ॥ यथा सावयवत्वेन पृथिव्यादेः कार्यत्व[8]सिद्धौ [9]परो ब्रूयादप्रयोजकोयं हेत्वाभास इति । तस्येदं मिथ्याऽभियो[10]गलक्षणं निग्रहस्थानम्॥२०॥

सिद्धान्तमभ्युपेत्याऽनियमात् कथाप्रसंगोऽपसिद्धान्तः ॥ यथा मीमांसामभ्युपगम्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह । कथं पुनरग्निहोत्रक्रियाध्वस्ता सती स्वर्गस्य साधिका भवतीत्यनुयुक्तः प्राह । [11]अनया [12]क्रिययाऽऽराधि[13]तो महेश्वरः फलं ददाति राजादिवत् । तस्येश्वरानभ्युपगमादपसिद्धान्तो निग्रहस्थानम् ॥ प्रतिज्ञातार्थविपर्ययस्तु प्रतिज्ञाहानिर्नापसिद्धान्तः ॥ २१ ॥

हेत्वाभासाश्च यथोक्ताः । हेत्वाभासलक्षणेनैव यथोक्तेन हेत्वाभासा निग्रहस्थानानि ॥ २२ ॥

एतेन दुर्वचनकपोलताडनवादित्रादीनां साधनानुपयोगित्वेन निग्रहस्थानत्वं वेदितव्यं । नियमकथायामपशब्दादीनामपि ॥

इति न्यायसारे द्वितीयः परिच्छेदः ॥

1 दूषणम् C.

2 C. D. add here परेणानभ्युपगमात्.

3 निग्रहं B. निग्रहस्थानप्राप्तस्य° (गौ).

4 नोदनीयः B. C. D. चोदनीयः(वा).

5 C. omits this line.

6 अनुक्तया°R.D.अनुयुक्तया°B.C.(वा.)

7 °दो° B. °दा° R. D. (वा.)

8 °त्वासिद्धौ B.

9 पुरो C.

10 °योगोलक्षणम्. C.

11 तया C.

12 क्रियाया° B.

13 °तःपरमेश्वरः B. °तो महेश्वरः D.

[1]अथावसितमनुमानमागमस्येदानीं लक्षणमुच्यते ॥ समयबलेन सम्यक्परोक्षानुभवसाधनमागमः ॥ स द्विविधो दृष्टाऽदृष्टार्थभेदात् । तत्र [2]दृष्टार्थानां वाक्यानां प्रायेण प्रवृत्तिसामर्थ्यात्प्रामाण्यं [3]गम्यते । [4]अदृष्टार्थानां पुनराप्तोक्तेनेति ॥ कथम् पुत्रकामो यजेते[5]त्यादि वाक्यानां प्रवृत्तिसामर्थ्यात्प्रामाण्यमनुमाय[6] तत्प्रणेतुरतीन्द्रियार्थदर्शित्वेन परमाप्तत्वमवधार्य तत्प्रणीतानां सर्ववाक्यानामप्रामाण्ये कारणाऽभावात्प्रामाण्यमनुमीयत इति ॥ न नित्यत्वेन वाक्यानां हि नित्यत्वे [7]प्रमाणाऽभावात् । अनित्यं पुनर्वाक्यत्वाद्यनेकमनुमानं । सर्वदोपलब्ध्यनुपलब्धिप्रसंग[8]श्चेति विपर्ययो[9] नियामकाभावात् । तदनुपलब्धिरिति चेन्न त[10]दनिर्देशात् ॥ वायुसंयोगविभागाविति चेन्न सर्वशब्दानां युगप[11]द्ग्रहणप्रसंगात् । कथम् । श्रोत्रं तावत्समानेन्द्रियग्राह्यसमानदेशसमानधर्मोपन्नानां[12] ग्रहणाय प्रतिनियत[13]संस्कारसंस्कार्यं न भवति इन्द्रियत्वाच्चक्षुर्वत् ॥

शब्दा वा प्रतिनियत[14]संस्कारसंस्कार्या न भवन्ति [15]समानेन्द्रियग्राह्यत्वे सति युगपदिन्द्रियसंब[16]द्धत्वात् घटादिवत् । उत्पत्तिपक्षेप्ययं समानो दोष इति चे[17]न्न मृत्पिंडप्रदीपदृष्टान्ताभ्यां कारकव्यंजकवैधर्म्यसिद्धेरित्यलमतिप्रसङ्गेनेति ॥

1 अथवसितं B. अवसितं C.
2 दृष्टार्थानां D. दृष्टानां B.
3 गम्यते B. C. अवगम्यते. D.
4 अदृष्टानां B.
5 इत्यैवमादि° D.
6 मीयते तत्प्र° B.
7 प्रामाण्याभावात् C.
8 श्च° B.
9 विपर्ययै° D.
10 अभिव्यंजकाभावात्तदनु° C. D.
11 युगपदग्रहण° B. युगपत्प्रहण° C. D.
12 °पन्नानामर्थानाम् C.
13 संस्कार्यं° B. संस्कारसंस्कार्यं. C. D.
14 संस्कार° B. संस्कारक° C. D.
15 समानेन्द्रियग्राह्यत्वे B. समानेन्द्रियग्राह्यसमानदेशसमानधर्मोऽपन्नत्वे C.
16 संबंधत्वात्. C. संबद्धत्वात्. B.
17 तम्° B. त्र मृ° C.



एवमेतानि त्रीण्येव प्रमाणानीति ॥ एष्वेवोपमानाऽर्थापत्तिसंभवाऽभावैतिह्यादीनामन्तर्भावः ॥ तत्र[1] यथा गौरेवं गवय इत्युपमानं [2]शाब्देऽन्तर्भूतम् । अनेन सदृशी मदीया गौरित्युपमानमिति चेन्न तस्य स्मृति[3]त्वात् ॥ पूर्वमेवं[4]हि सादृश्यविशिष्ट [5]उपलब्धो गोपिण्डः । कस्मात् । उपलब्धियोग्यत्वात्[6] । अयोग्यत्वे वा [7]न कदाचिदुपलभ्येताऽदृष्ट[8]त्वात् ॥ निर्विकल्पेन तु[9] प्रत्यक्षेण[10] पूर्वं सादृश्यमुपलब्धं तेन तदु[11]पलब्ध्यभिमानो न भवति । [12]निर्विकल्पकोप[13]लंभेऽपि सं[14]स्कारसहकारिसामर्थ्यादभावादिषु सविकल्पका स्मृतिर्दृष्टेति ॥

संज्ञासंज्ञिसंबंधप्रतिपत्तिरथाऽप्तवचनकार्या । तथा प्रश्नोत्तराभिधानादन्यप्रमाणाऽनिर्देशात् ॥ अस्य गवयशब्दः संज्ञेति प्रतिपत्तावुपमानसिद्धिस्तथाशब्दश्रवणादिति चेत् । एवं तर्हि गौरयमित्येवं संकेते [15]कृतेऽस्य गोशब्दः संज्ञेति प्रतिपत्तौ प्रमाणान्तरं वाच्यम् । समानन्यायत्वात् ॥ गोपिंडान्तरेऽपि संकेतग्रहणे प्रमाणान्तराभिधानप्रसंग इति ॥ तथाशब्दानभिधानेऽपि प्रतिपादकप्रतिपाद्य[16]योरेवमेवाभिप्राय ईदृशस्य सर्वस्य गोशब्दः संज्ञेति सामर्थ्या[17]देवं प्रतिपत्तिरिति चे[18]न्न । समानमेतदत्रापि गोसदृशो गवय इति शब्दादुभयोरे[19]वाभिप्रायो गोसदृशस्यार्थस्य गव-

1 तत्र य° B. तद्य° D.
2 शाब्दे° B. C. शब्दे° D.
3 स्मृतित्वात् B. स्मृतत्वात् C.
4 °मेव B. °मेवहि D. C.
5 गौरुपलब्धः D उपलब्धो B. C.
6 °त्वात् B. °त्वात्सादृश्यस्य D.
7 D omits न.
8 अदृष्टवत् C. D. अदृष्टत्वात् B.
9 तु C. पुनः D. च B.
10 D. inserts here गवयदर्शनात्.
11 तदो° C. पदो° B. तदु° D.
12 D inserts प्रथमगोपिंडोपलंभकलिंगत्वोपलंभात् before निर्विकल्पक.
13 °पलंभ° C. B.
14 C. D. omit संस्कार.
15 C. D. omit कृते°.
16 प्रतिपत्त्रो° B. प्रतिपाद्ययो° C.
17 °देवं B. द्वैधं C.
18 चेत्° B. चेन्न D.
19 °रेवाभि° B. °रेवमभि° C. D.

यशब्दः संज्ञेति सामर्थ्यादेवं प्रतिपत्तिरिति ॥ न च प्रत्यक्ष एवाऽर्थे संज्ञासंज्ञिसंबंधप्रतिपत्तिरप्रत्यक्षेऽपि शक्रादौ संज्ञासंज्ञिसंबंधप्रतिपत्तिदर्शनात् ॥

सूत्रविरोध इति चेन्न प्रमाणनिग्रहस्थानाभ्यां दृष्टान्तहेत्वाभासादीनामिव प्रयोजनवशेन पृथगभिधानादिति । तर्हि[1] प्रयोजनं वाच्यमुच्यते । शब्दप्रामाण्यसमर्थनं प्रयोजनम् । कथम् । केचिदाहुः प्रत्यक्षानुमानविषयत्वे शब्दस्यानुवादकत्वमेव[2] । [3]अनुवादकं चाऽप्रमाणम् । तदविषयत्वे च संबंधाऽग्रहणादवाचकत्वम् पदार्थस्या[4]प्रसिद्धत्वान्न च पदेन संबंधग्रहणमितरेतराश्रयत्वात्[5] । वाक्यार्थस्तु प्रसिद्धार्थानां[6] पदार्थानामन्वयमात्रमिति[7] ॥ तन्निराकरणार्थमुपमानं निदर्शनार्थत्वेन पृथगुक्तम् । यथा [8]गवयार्थिनाऽ[9]प्रसिद्धगवयस्य प्रसिद्धगोसादृश्यमुपादायोपमानाख्येन वाक्येन संज्ञासंज्ञिसंबंधप्रतिपत्तिः क्रियते तथा किंचिन्निमित्तमुपादाय शक्रादि—पदपदार्थयोरपीति । तस्मादन्यार्थत्वान्न सूत्रविरोधः ॥

परीक्षा चार्थापत्तिवत्प्रमाणस्य सतः प्रमाणेष्वंतर्भावज्ञापनार्थम् । अंतर्भावस्तु यथाश्रुतोऽप्यनुमान एवास्य निराकृतो नाऽऽगम इति ॥

चतुष्ट्वाभिधानं [10]सूत्रेषु पंचत्वादि[11]निराकरणार्थं न [12]त्रित्वप्रतिषेधार्थं । प्रमाणसिद्धत्वादंतर्भावस्य ॥ त्रित्वाऽनभिधानादयुक्तमिति

1 तर्हि B. एवं तर्हि° D.
2 °त्वमेव D °त्वात् B.
3 This phrase is found in D. B and C omit it.
4 अप्रसिद्धत्वात्° B. अवसिद्धत्वात्° D.
5 °श्रयत्वात् B. °श्रयत्वप्रसंगात् D.
6 प्रसिद्धानामु° B. प्रसिद्धार्थानामु° D.
7 B here inserts the phrase वाक्यं तु पदानामन्वयमात्रमिति.
8 गवयार्थिना° B. कार्यार्थिनो. C.
9 प्रसिद्ध° B अप्रसिद्ध° D.
10 D omits सूत्रेषु.
11 °त्वादिनिरा° B. °त्वनिरा° D.
12 C omits त्रित्व···र्थं.



चेन्नाऽस्य सूत्रकारस्यैवं स्वभावत्वात् [1]स्वसिद्धान्तमपि क्वचिन्नाधत्ते । यथा कृत्स्नै[2]कदेशविकल्पादिनाऽवयवि[3]निराकरणे विशिष्टानामूहादिशक्त्यतिशययुक्ता[4]नामेवात्राधिकारः । तस्मात्स्थितमुपमानं शब्देऽन्तर्भूतम् ॥

अर्थापत्तेरप्यनुमानेऽन्तर्भावोऽविनाभावबलेना[5]र्थप्रतिपत्तिसाधनत्वात् । अन्यथा नोपपद्यत इत्युक्ते सत्येवोपपद्यत इति लभ्यते[6]ऽयमेवाऽविनाभावः ॥ यत्र सामान्याऽऽकारेणाऽन्वयग्रहणं नास्ति यथा मुख्यकारणत्वाऽप्रतिबद्धशक्त्योस्तत्रार्थापत्तिः पृथक्प्रमाणमिति चेन्न । तत्रापि केवलव्यतिरेक्यनुमाना[7]ऽव्यतिरेकात् । केवलव्यतिरेक्यर्थापत्तिरिति संज्ञाभेदमात्रम् ॥ अन्वयाऽभावान्नैतदनुमानमिति चेन्न केवलान्वयिनो व्यतिरेकाऽभावे [8]प्रमाणान्तरत्वप्रसंगात् । अपि [9]वा प्रत्यक्षादिभेदानां केनचिद्धर्मेण भेदात्प्रमाणान्तरत्वप्रसंगः । तस्मादविनाभावबलेनैवार्थप्रतिपादकत्वादर्थापत्तिरनुमानमिति ॥

[10]बहुसंख्याविषयत्वे सत्यल्पसंख्याविषयत्व[11]स्य सर्वत्रोपलब्धत्वान्नानुमानात्संभवो भिद्यत इति ॥

अभावस्य तु त्रिष्वपि यथासंभवेनान्तर्भावः । तथाहि । [12]कौरवाद्यभावप्रतिपत्तिरागमात् । आत्मादिषु रूपाद्यभावप्रतिपत्ति-

1 B adds here यत्.
2 प्रश्नै° B. कृत्स्नै° C. D.
3 अवयवि° C. D. अवयव° B.
4 युक्तानामेवात्राधिकारः C. युक्ताधिकारज्ञापनार्थम्. B.
5 बलेन B. C. बलेनैव D.
6 लभ्यते C. D. लक्ष्यते B.
7 °मानाऽव्य° C. मानादव्य° B.
8 प्रमाणान्तरत्वप्रसंगात् D. °न प्रमाणान्तरं स्यात्° B. C.
9 च C. D. वा B.
10 बहुत्वसंख्या° C. D. बहुसंख्या° B.
11 विषयस्य C. D. विषयत्व° B.
12 कौरवाद्य° D. कैरेवाद्य° B; C. omits this whole phrase.

रनुमानात् । भूतलादिषु घटाद्यभावप्रतिपत्तिः प्रत्यक्षात्[1] । इन्द्रियव्यापारभावभावित्वादिति ॥ अन्यत्र तद्भावभावित्वं पर्यवसितमिति चेन्न रूपादिष्विव बाधकाऽभावात् ॥ संबंधाभावो बाधक इति चेन्न स्वपरपक्षयोरसिद्धत्वात् स्वपक्षे तावद्रूपादिष्विवापरोक्षानुभवकार्यानुमेयो योग्यताख्यः संबन्धः[2] । परपक्षेऽपि संयुक्तविशेषणभावादिः ॥ संयोगसमवायरहितस्य विशेषणविशेष्यभावानुपपत्तिरिति चेन्न विशिष्टप्रत्ययवशेन तत्सिद्धेरिति[3] ॥

अनिर्दिष्टप्रवक्तृकं प्रवादपारंपर्यमैतिह्यमागमेऽन्तर्भूतम् ॥ यथेह वटे यक्षः प्रतिवसति ।

प्रयत्न[4]जनिता शरीरतदवयवक्रिया चेष्टा सा[5] नाट्यशास्त्रादिप्रसिद्धा समयबलेन पुरुषाभिप्राय[6]मर्थविशेषं च गमयंती[7] नाऽऽगमाद्भिद्यते । लिप्यक्षरादर्थप्रतिपत्तिवदिति ॥ तदेवं व्यवस्थितमेतानि[8] त्रीण्येव प्रमाणानीति[9] ॥

किं पुनरेभिः प्रमाणैः प्रमातव्यमित्युच्यते[10] । प्रमेयम् । किं लक्षणम् । यद्विषयं[11]ज्ञानमन्यज्ञानानामु[12]पयोगित्वेनैव निःश्रेयससाधनं[13] भवति तत्प्रमेयम् । तदेव तत्वतो ज्ञातव्यम् सर्वदा भावयितव्यं च । न कीटसंख्यादिवत् ज्ञानस्यानुपयोगित्वात्[1] ॥

1 प्रत्यक्षात् B. प्रत्यक्षत्वात् D.
2 D omits संबन्धः.
3 °द्धेः B °द्धिः C. D.
4 °जनिता C. D. °जन्या B.
5 सा नाट्य° C. D; अनादि° B. अनाद्यशास्त्रादिसमयबलेन C.
6 पुरुषाभिप्रायविशेषम्° B. पुरुषाभिप्रायविशेषमर्थविशेषम्° C. पुरुषाभिप्रायमर्थविशेषम्° D.
7 गमयंती B. गमयती D.
8 एतानि त्रीण्येव B. एतत्रीण्येव C.
9 D here inserts इति तृतीयोऽयमागमपरिच्छेदः
10 °तव्यं । उच्यते C. B. °तव्यमित्युच्यते D.
11 विषयं ज्ञानम् C. D. विषयज्ञानम् B.
12 ज्ञानामु° B. ज्ञानानुप° C. D.
13 निःश्रेयसांगं C. निःश्रेयससाधनं B.



तच्चतुर्विधम्[2] । हेयं तस्य निर्वर्तकम्[3] हानं[4] तस्योपाय इति ॥ तत्र हेयं दुःखमनागतमेकविंशतिप्रकारकम्[5] । शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेति ॥ तत्र शरीरं दुःखायतनत्वाद्दुःखम् । इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात्[6] । सुखं[7] दुःखानुषंगाद्दुःखम् । दुःखं च[8] बाधना पीडा संतापात्मकं मुख्यमेवेति ॥

तस्य निर्वर्तकमसाधारणं कारणमविद्यातृष्णे धर्माधर्माविति । सम्यगध्यात्मविद्भिः प्रदर्शितार्थविपरीतज्ञानमविद्या ॥ सहसंस्कारेण पुनर्भवप्रार्थना[9] तृष्णा ॥ सुखदुःखयोरसाधारणौ हेतू धर्माधर्माविति ॥

हानं दुःखविच्छेदः । आत्यन्तिकमिति न कदाचित्कथंचिद्दुःखसंबंधः ॥

तस्योपायस्तत्वज्ञानमात्मविषयम् ॥ तथा चोक्तम् । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति । श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । ज्ञात्वा च सततं ध्येयः एते दर्शनहेतवः । तरति शोकमात्मविदिति ॥

स द्विविधः । परश्चापरश्च । तथा चोक्तम् । [10]द्वे ब्रह्मणी वेदितव्ये परं चापरं चेत्यादिः ॥ तत्रैश्वर्यविशिष्टः संसारधर्मैरीषदप्यसंस्पृष्टः[11] परो भगवान्महेश्वरः[12] सर्वज्ञः सकलजगद्विधाता ।

1 °नुपयोगात् C. °नुपयोगित्वात् B D.
2 तत् प्रमेयम् C.
3 विनिवर्तकम् B. निर्वत्रिकम् C. निर्वर्तकम्. D. (जयसिंह).
4 हीनं B. हानम् C.
5 प्रकारकम् B. प्रकारम् C. D.
6 तत्साधने भावाद्दुःखम् D. तत्साधनभावात्° B.
7 सुखम् B. C. सुखमपि D.
8 च B. तु C. D.
9 प्रार्थना B. प्रार्थनम् C.
10 D has तथा चोक्तम्. B omits it.
11 °संस्पृष्टः B. D. °स्पृष्टः C.
12 D inserts after महेश्वरः, and before सर्वज्ञः, परमैश्वर्यविशिष्टः संसारधर्मैं रागद्वेषमोहदुःखादिभिरीषदप्यस्पृष्टोऽनादिः.

स कथं ज्ञातव्यः । अनुमानादागमाच्च ॥ तथाहि विवादाध्यासितमुपलब्धिमत्कारणकमभूत्वाभावित्वाद्वस्त्रादिवदिति । सामान्यव्याप्तेरनवद्यत्वेन निराकर्तुमशक्यत्वात् । ततः सामान्यसिद्धौ पारिशेषात्कार्यविशेषाच्च कर्तृविशेषसिद्धिः चित्रादिकार्यविशेषात्कर्तृविशेषसिद्धिवत् ॥

एको हि रुद्रो न द्वितीयाय तस्थुर्य्य इमान्लोकानीशित ईशिनीभिरित्यागमाच्चेति ॥

संसार[1]भोक्ताऽनन्तोऽपरः । स खलु बुद्ध्यादिकार्याणामाश्रयभूतोऽनुमातव्यः । न हि कार्यमनाधारं किंचिदुपलब्धम् । न चेन्द्रियाणामाश्रयत्वमुक्तमुपहतेन्द्रियस्य विषयस्मरणाऽयोगात् । अन्यानुभूतेर्थेऽन्यस्य [2]स्मरणाऽदर्शनात् । अत एव शरीरस्यापि बाल्यकौमारादिभेदभिन्नत्वादस्मरणम् । एते[3]न पूर्वबुद्ध्यनुभूतेर्थ उत्तरबुद्धेः कार्यकारणभावात्स्मरणमपास्तमन्यत्वा[4]ऽविशेषात् ॥ [5]कर्पासे रक्ततावदिति चेन्न साधनदूषणा[6]ऽसंभवात् । अन्वयाद्यभावान्न साधनमसिद्धत्वाद्यनुद्भावना[7]न्न दूषणमिति । न च कर्पासेऽपि निरन्वयविनाशोत्पादे रक्ततोत्पद्यते कर्पासान्तरवत् । एतेनैव क्षणिकत्वमपास्त[8]म् ॥ प्रत्यभिज्ञाख्येन च प्रत्यक्षेण स्फटिकादिष्वक्षणिकत्वं गृह्यते । प्रदी[9]पादिष्विव भ्रान्तमिति चेन्नैकत्रबाध्यत्वेन भ्रान्तत्वं सर्वत्र तत्कल्पनायामतिप्रसंगात् । अनभ्युपगाच्च सादृश्यस्य क्षणिकत्वे भ्रान्तिबीजाभाव इति ॥

[10]तत्सिद्धमेतच्छरीरादिव्यतिरिक्त आत्मा व्यापको नित्य इति ।

1 संसारभोक्ता B. संसारफलोपभोक्ता C. D.

2 अन्यस्म° B. अन्यस्य स्म° D.

3 °न B. तु D.

4 अन्यत्वावि° B. अन्यत्ववचनात् C. अन्यत्वात् D.

5 कर्पासे° C. D. कार्पसे B.

6 दूषणाऽभावात् B.

7 °नान्न B. °नाच्चन D.

8 अपास्तम् B. निरस्तं ज्ञेयम् C.

9 प्रदीपा° B. प्रतीप° C. D.

10 तदेतत्सिद्धम् C. तत्सिद्धमेतत् B.



नित्यत्वं कुत इति चेदनादित्वात् । तदेव कथम् । जातमात्रे[1] जन्मान्तरानुभवसूचकस्मरणालिंगस्य हर्षभयशोकमो[2]हशून्याभिलापादेरुपलंभात् ॥

धर्मादेराश्रयसंयोगा[3]ऽपेक्षस्य गुरुत्वादिवदाश्रयांतरे [4]वाय्वादौ क्रियाकर्तृत्वा[5]दणिमाद्युपेतस्य [6]युगपदसंख्यातशरीराधिष्ठातृत्वाच्च [7]व्यापकत्वसिद्धिः ॥ तथा चोक्तं पुराणादिषु—

आत्मनो वै शरीराणि बहूनि मनुजेश्वराः । प्राप्य योग्यं[8] बलं कुर्यात् तैश्च सर्वां महीं चरेत् ॥ भुंजीत विषयान्कैश्चित् कैश्चिदुग्रं तपश्चरेत् । संहरेच्च पुनस्तानि सूर्यस्तेजोगुणानिव ॥

तदेवमपरात्मतत्वज्ञानं परलोकसद्भावेन [9]परलोकप्रत्युप[10]योगित्वादधर्मक्षयहेतुत्वाच्च निश्रेयसांगमिति ॥

परमात्मज्ञानं [11]च तदुपासनांगत्वेनापवर्गसाधनम् ॥

स चोपासनाविधिः क्ले[12]शक्षयसमाधिलाभार्थमनुष्ठानम् । तथा चोक्तम् । तपःस्वाध्यायेश्वरप्रणिधानात्मिकाक्रियायोगः क्लेशतनूकरणार्थसमाधिलाभार्थश्चेति ॥

तत्रोन्मादकामादिव्यपोहार्थमाध्यात्मिकादिदुःखसहिष्णुत्वं तपः ॥ प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यासः स्वाध्यायः ॥ [13]परमेश्वरतत्वस्य प्रबन्धेनानुचिंत[14]नमीश्वरप्रणिधानम् ॥ समासतो रागद्वेषमोहाः क्लेशाः समाधिप्रत्यनीकाः संसारापत्तिद्वारेण क्लेशहेतुत्वात् ॥

1 जातमात्रे° B. मात्रस्य जन्तोः D. जातमात्रे प्राणिनि C.

2 C and D omit मोह.

3 °गा° C. D °गो° B.

4 चा° C. D वा° B.

5 कर्तृत्वात् B. कर्तृत्वदर्शनात् C D.

6 युगपद° C. गुणवद° B.

7 व्यापकत्वसिद्धिः C. व्यापकासिद्धिः B

8 योगं B. योग्यं D.

9 परलोकं D परलोके B.

10 प्रभ्यु° D. प्रवृत्त्यु° B.

11 चोपासना B च तदुपासना D.

12 क्लेशक्षय° B. क्लेशकर्मक्षय° D.

13 परमेश्वरतत्वस्य B. परमेश्वरस्यतत्वस्य D

14 अनुचिंतनम् B. अनुचिंतनपर्यालोचनम् D.

